# पाणिनीय शिक्षा

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा
शास्त्रानुपूर्व्यं तद्विद्याद्यथोक्तं लोकवेदयोः १

प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः
पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् २

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ३

स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमः स्मृताः ४

अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ
दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च ५

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ६

मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्
प्रातःसवनयोगं तं छन्दोगायत्रमाश्रितम् ७

कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम्
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ८

सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ९

स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः
इति वर्णविदः प्राहुर्निपुणं तं निबोधत १०

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि  ११

उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः  १२

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च  १३

ओभावश्च विवृत्तिश्च शषसा रेफ एव च
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः  १४

यद्योभावप्रसन्धानमुकारादिपरं पदम्
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः  १५

हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्
औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम्  १६

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः  १७

जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः
ए ऐ तु कण्ठतालव्या ओ औ कण्ठोष्ठजौ स्मृतौ  १८

अर्धमात्रा तु कण्ठ्यस्य ह्येकारैकारयोर्भवेत्
ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम्  १९

संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम्
घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः  २०

स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्

तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च  २१

अनुस्वारयमानां च नासिका स्थानमुच्यते
उपध्मानीय ऊष्मा च जिह्वामूलीयनासिके
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः  २२

अलाबुवीणानिर्घोषो दन्तमूल्यः स्वरानुगः
अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च  २३

अनुस्वारे विवृत्त्यां तु विरामे चाक्षरद्वये
द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः  २४

व्याघ्री यथा हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत्
भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत्  २५

यथा सौराष्ट्रिका नारी तक्राँ इत्यभिभाषते
एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया  २६

रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम्
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत्  २७

हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि
नासिकायां त्वथार्धं च रङ्गस्यैव द्विमात्रता  २८

हृदयादुत्कटे तिष्ठन्कांस्येन स्वमनुस्वरन्
मार्दवं च हिमात्रं च जघन्वाँ२ इति निदर्शनम्  २९

मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समो भवेत्
सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम्  ३०

एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः

सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ३१

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ३२

माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः
धैर्यं लयसमर्थं च षडेते पाठका गुणाः ३३

शङ्कितं भीतमुद्धुष्टमव्यक्तमनुनासिकम्
काकस्वरं शिरसिगं तथा स्थानविवर्जितम् ३४

उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम्
निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ३५

प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन
मध्यन्दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ३६

तारं तु विद्यात्सवने तृतीये शिरोगतं तच्च सदा प्रयोज्यम्
मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ३७

अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः
शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ३८

ञमोऽनुनासिका नह्रो नादिनो हझषः स्मृताः
ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः ३९

ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते
दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि ४०

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ४१

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ४२

उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा
उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ४३

उदात्तं प्रदेशिनीं विद्यात् प्रचयं मध्यतोऽङ्गुलिम्
निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ४४

अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम्
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ४५

अग्निः सोमः प्र वो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती
अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्यनुदात्तं वीर्यं
नीचस्वरितम् ४६

हविषां मध्योदात्तं स्वरिति स्वरितं बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती
इति त्र्युदात्तम् ४७

अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः
स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ४८

चाषस्तु वदते मात्रां द्विमात्रं चैव वायसः
शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ४९

कुतीर्थादागतं दग्धमपवर्णं च भक्षितम्
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्विषात् ५०

सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम्
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ५१

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्  ५२

अवक्षरमनायुष्यं विस्वरं व्याधिपीडितम्
अक्षताशस्त्ररूपेण वज्रं पतति मस्तके  ५३

हस्तहीनं योऽधीते स्वरवर्णविवर्जितम्
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति  ५४

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते  ५५

शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः   ५६

येनाक्षरसमाम्नायमधिगम्य महेष्वरात्
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः  ५७

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः  ५८

अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः  ५९

त्रिनयनमुखनिःसृतामिमां य इह पठेत्प्रयतः सदा द्विजः
स भवति पशुपुत्रकीर्तिमान्सुखमतुलं च समश्नुते दिवि दिवीति  ६०